# श्रीघटिकाचलहनुमत्स्तोत्रम्

ओं हनुमते नमः

शङ्खचक्रधरं देवं घटिकाचलवासिनम् ।
योगारूढं ह्याञ्जनेयं वायुपुत्रं नमाम्यहम् ॥ १॥

भक्ताभीष्टप्रदातारं चतुर्बाहुविराजितम् ।
दिवाकरद्युतिनिभं वन्देऽहं पवनात्मजम् ॥ २॥

कौपीनमेखलासूत्रं स्वर्णकुण्डलमण्डितम् ।
लङ्घिताब्धिं रामदूतं नमामि सततं हरिम् ॥ ३॥

दैत्यानां नाशनार्थाय महाकायधरं विभुम् ।
गदाधरकरो यस्तं वन्देऽहं मारुतात्मजम् ॥ ४॥

नृसिंहाभिमुखो भूत्वा पर्वताग्रे च संस्थितम् ।
वाञ्छन्तं ब्रह्मपदवीं नमामि कपिनायकम् ॥ ५॥

बालादित्यवपुष्कं च सागरोत्तारकारकम् ।
समीरवेगं देवेशं वन्दे ह्यमितविक्रमम् ॥ ६॥

पद्मरागारुणमणिशोभितं कामरूपिणम् ।
पारिजाततरुस्थं च वन्देऽहं वनचारिणम् ॥ ७॥

रामदूत नमस्तुभ्यं पादपद्मार्चनं सदा ।
देहि मे वाञ्छितफलं पुत्रपौत्रप्रवर्धनम् ॥ ८॥

इदं स्तोत्रं पठेन्नित्यं प्रातःकाले द्विजोत्तमः ।
तस्याभीष्टं ददात्याशु रामभक्तो महाबलः ॥ ९॥

